अथ

# श्रीशिवपञ्चाक्षर-नक्षत्रमालास्तोत्रम् ।

## ललितापञ्चरत्नं च



श्रीयुच्छ्रेष्ठिवर्येण गणपतिरायकांयाँगुप्तेन

प्रकाशितम् ।



❀ श्रीसाम्बमूर्तिर्जयति ❀

श्रीमत्परमहंस–परिव्राजकाचार्य-भगवत्पूज्यपाद-
जगद्गुरु-श्री १००८ शङ्कराचार्यविरचितम्–

# श्रीशिवपञ्चाक्षर-
# नक्षत्रमालास्तोत्रम् ।

श्रीवाराणस्यां श्रीसिद्धेश्वर्यात्मवीरेश्वरमणिकर्णिकान्त-
रालवर्ति-श्रीगणेशसौधमहासंस्थान-विराजितैः
श्रीपूज्यपादश्री १०८ गजाननस्वरूपब्रह्म-
चारिश्रीचरणैः सङ्कलितम् ।

डोगरा-अनन्तरामशास्त्रिणा संशोधितम् ।

जयपुरमण्डलान्तर्गत सूर्य( गढ़ )दुर्गाभिजनेन
वैश्यवंशावतंसेन श्रीगणपतरायकांयाँमहोदयेन
स्वद्रव्यव्ययेन धर्मार्थं प्रकाशितम् ।

१९९७ वैक्रमाब्दे, माघे गणेशचतुर्थ्याम्, भृगौ ।

* श्रीमहामङ्गलमूर्तये नमः *

वन्दे मन्दारमालाढ्यं मन्दस्मितमनोहरम् ।
मधुरं मन्दमिच्छन्तं चिन्तामणिविनायकम् ॥



गलद्दानगण्डं मिलद्भृङ्गषण्डं,
चलच्चारुशुण्डं जगत्त्राणशौण्डम् ।
कनद्दन्तकाण्डं विपद्भङ्गचण्डं,
शिवप्रेमपिण्डं भजे वक्रतुण्डम् ॥

* श्रीगणेशाय नमः *

शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

आदौ विभूति-रुद्राक्षधारणस्यावश्यकत्वं यथा कात्यायन-श्रौतसूत्रे—

अनामिकया प्रास्तादादत्ते प्रसद्येति १६-६-२९ ।

कर्कभाष्यम्—अप्सु क्षिप्ताद्भस्मनः सकाशादनामिकया भस्म गृह्णाति 'प्रसद्य०' ( वा० सं० १२-३८, ३९, ४०, ४१ ) इति च ।

प्रास्योखायामुपतिष्ठते बोधाम इति १६-६-३० ।

कर्क०—तडागादागत्यानामिकया गृहीतभस्म तूष्णी-मुखायां प्रास्य 'बोधामे०' ( वा० सं० १२-४३, ४४, इति द्वाभ्यामृग्भ्यामुख्याग्निमुपतिष्ठत इत्यर्थः । ) पारस्करगृह्ये—

"त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम्" । इति ।

भस्म—विभूतिः । पापानां रोगाणां मायापाशस्य च भर्त्सनाद्भस्म । तत्र पापनिवर्तकत्वं जाबालश्रुतौ प्रसिद्धम्—

पापं नाशयते कृत्स्नमपि जन्मशतार्जितम् । इति ।

रोग-ग्रहपीडानिवर्तकत्वं रक्षार्थत्वकीर्तनेनानुशासनिके उमामहेश्वरसंवादे दर्शितम्—

रक्षार्थं मङ्गलार्थं च पवित्रार्थं च भामिनि ! ।
लाञ्छनार्थं च भक्तानां भस्म दत्तं मया पुरा ॥ इति ।
पाशनिवर्तकत्वं ब्रह्मोत्तरखण्डे प्रदर्शितम्—
उद्धूळनं त्रिपुण्ड्रं च माया(१)पाशनिवृत्तये ।
आचरन्ति मुनिश्रेष्ठ ! अथर्वशिरसिस्थितम् ॥ इति।
विशिष्टं तु वासिष्ठलैङ्गे दर्शितम्—
भर्त्सनात्सर्वपापानां पाशानां च महामुने ! ।
भस्मेति कीर्त्यते रक्षा रोगाणां चापि भर्त्सनात् ॥इति
तथा च माधवीये स्मृतिरत्ने नारदीयवचनमुदाहृतम्—
भासनाद्भसितं प्रोक्तं भस्म पापस्य भर्त्सनात् ।
भूतिर्भूतिकरी पुंसां रक्षा रक्षाकरी पुनः ॥ इति
वासिष्ठलैङ्गेऽपि—
भयेभ्यो रक्षणाद्रक्षा भासनाद्भसितं तथा । इति
ब्रह्मोत्तरखण्डे-महाभस्म महादेवो महामायावभासकः

भस्मनश्च ज्ञानहेतुत्वं तत्साध्योद्धूलनस्य पाशुपतव्रताख्यस्य मोक्षविद्याङ्गत्वेन श्रवणात् । यथाऽथर्वशिरसि—

"अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय" इति ।

ज्ञानैकसाध्याया विमुक्तेर्भस्मोद्धूलनक्रियाफलत्वोक्त्या विमोक्षशब्दस्य तत्साधनविद्यापरत्वात् ।

(१) 'पाशः' संसारः ।

"तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्" इति मुण्डकोपनिषद्वचनाच्च । 'शिरोव्रत'पदेनात्र भस्मोद्धूलनस्य विवक्षितत्वात् । शिरोव्रतशब्दस्य भस्मोद्धूलने रूढिः स्कान्दान्तर्गतसौरसंहितावचनेन दर्शिता—

अग्निरित्यादिभिर्मन्त्रैः षड्भिः शुद्धेन भस्मना।
सर्वाङ्गोद्धूलनं कुर्याच्छिरोव्रतसमाह्वयम् ।। इति ।

श्रीमदप्पयदीक्षितपादैरपि—'भस्मना सान्द्रसर्वाङ्गसंस्पर्शनात्मकमुद्धूलनं कुर्यात्' इति शिवार्चनचन्द्रिकायामभिहितम् ।

वासिष्ठलैङ्गेऽपि—

बहुनोक्तेन किं भस्म धारणं मोक्षसाधनम् ।
भस्मना नित्ययुक्तस्य ज्ञानमुत्पद्यतेऽचिरात् ।। इति।
विभूतिधारणं कार्यं * रुद्राक्षाणाञ्च धारणम् ।
क्रमयोगेन कर्तव्यं सर्वदा जपसाधकैः ।।

इति देवीभागवतेऽपि ।

एवंरूपपाशुपतव्रतस्य भगवता शिवेनैव प्रथमं प्रवर्तितत्वात् । अत एव प्रथमं स्वेनाचरितं पश्चात् कुवेरेणेति स्वद्वितीयतया तेन तस्मै सखित्वं दत्तमित्युत्तररामायणे वर्णितम् । यथा—

मया चैतद्व्रतं चीर्णं त्वया चैव नराधिप ! ।
तृतीयः पुरुषो नास्ति यश्चरेद् व्रतमीदृशम् ।।

* एवं रुद्राक्षधारणेऽपि श्रुतिस्मृतिपुराणेष्वनेकवचनानि सन्ति परञ्च गौरवभयान्नात्र लिखितानि ।

व्रतं सुदुश्चरं ह्येतद् मयैवोत्पादितं पुरा।
तत्सखित्वं मया सौम्य! रोचय त्वं धनेश्वर!॥ इति।

एवं च सकलब्रह्मविद्यासाधनाङ्गभूतं पाशुपतव्रतरूपभस्मरुद्राक्षधारणं कार्यम्।

आचम्य शिवपञ्चाक्षरमहामन्त्रेण प्राणानायम्य—

## संकल्पः—

ॐ विष्णुर्विष्णुर्विष्णुस्तत्सदद्य महामाङ्गल्यप्रदामुकमासीयामुकपक्षीयामुकतिथावमुकवासरे गोत्रः शर्मा ( क्षत्रियश्चेद्वर्मा, वैश्यश्चेद्गुप्तः ) धर्मग्लान्यधर्माभ्युत्थाननिवृत्तिपूर्वकं धर्मसंस्थापनार्थं श्रीसाम्बसदाशिवप्रीतये शिवपञ्चाक्षरनक्षत्रमालास्तोत्रपाठमहं करिष्ये।

ओङ्काराकारशुण्डाग्रं, समष्ट्याम्नायरूपिणम्।
वेदान्तवेद्यं सद्वन्द्यं, नौमि सिद्धिविनायकम्॥१॥

सदा बालरूपाऽपि विघ्नाद्रिहन्त्री,
महादन्तिवक्त्राऽपि पञ्चास्यमान्या।
विधीन्द्रादिमृग्या गणेशाऽभिधा मे,
विधत्तां श्रियं काऽपि कल्याणमूर्तिः॥२॥

वागीशाद्याः सुमनसः, सर्वार्थानामुपक्रमे।
यन्नत्वा कृतकृत्याः स्युस्तन्नमामि गजाननम्॥३॥

अप्रमेयत्रयातीतनिर्मलज्ञानमूर्तये।
मनोगिरां विदूराय, दक्षिणामूर्तये नमः॥४॥

विश्वेशं माधवं ढुण्ढिं, दण्डपाणिं च भैरवम्।
वन्दे काशीं गुहं गङ्गां, भवानीं मणिकर्णिकाम्॥५॥

भवान्यै भवायाऽपि, मात्रे च पित्रे,
मृडान्यै मृडायाऽप्यघघ्न्यै मखघ्ने।
शिवाङ्ग्यै शिवाङ्गाय कुर्मः शिवायै,
शिवायाऽम्बिकायै नमस्त्र्यम्बकाय ॥६॥

मयूराधिरूढं महावाक्यगूढं,
मनोहारिदेहं महच्चित्तगेहम्।
महीदेवदेवं महावेदभावं,
महादेवबालं भजे लोकपालम् ॥७॥

नमः सवित्रे द्वाराय मुक्तेरमिततेजसे।
ऋग्यजुःसामरूपाय त्रयीधामात्मने नमः ॥८॥

काशी गङ्गाऽन्नपूर्णा च, विश्वेशाद्याश्च देवताः।
अवन्तु बालमज्ञं मामुशतीरिव मातरः ॥९॥

लक्ष्मीकलत्रं ललिताब्जनेत्रं,
पूर्णेन्दुवक्त्रं पुरुहूतमित्रम्।
कारुण्यपात्रं कमनीयगात्रं,
वन्दे पवित्रं वसुदेवपुत्रम् ॥१०॥

जटाधरं पाण्डुरङ्गं शूलहस्तं महागुरुम्।
सर्वदोषहरं देवं, दत्तात्रेयं नमाम्यहम् ॥११॥

योगीश्वरं याज्ञवल्क्यं, कण्वमाध्यन्दिनाङ्कितम्।
कात्यायनादिसहितं, तं वन्दे वेदविग्रहम् ॥१२॥

परशिवविष्णुविरिञ्चीन्, वशिष्ठशक्ती पराशरव्यासौ।
शुकगौडपादसंज्ञौ, वन्दे गोविन्दशङ्करौ क्रमशः ॥१३॥

तं वेदशास्त्रपरिनिश्चितशुद्धबुद्धिं,
चर्माम्बरं सुरमुनीन्द्रतनुं कवीन्द्रम्।
कृष्णत्विषं कनकपिङ्गजटाकलापं,
व्यासं नमामि शिरसा तिलकं मुनीनाम् ॥१४॥

यं प्रव्रजन्तमनुपेतमपेतकृत्यं,
द्वैपायनो विरहकातर आजुहाव।
पुत्रेति तन्मयतया तरवोऽभिनेदु-
स्तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥१५॥

शङ्करं शङ्कराचार्यं केशवं बादरायणम्।
सूत्रभाष्यकृतौ वन्दे, भगवन्तौ पुनः पुनः ॥१६॥

श्रीजगद्गुरवे ब्रह्मविद्याधीश्वराय सिद्धेश्वराय तरुणाय व्यूढोरस्कायातुच्चायाऽपि जगदुच्चाय बृहच्छीर्षाय कौपीनमात्रपरिधानाय विशालनयनाय स्मितवदनाय रुचिरकान्तये जगद्दत्तशान्तये कृपाऽपाङ्गाय करुणामूर्तये दीर्घभ्रूलताय विशालभालाय प्रकटितश्रुतिरहस्याय सर्वज्ञाय श्रीशङ्कराय नमः।

श्रुतिस्मृतिपुराणानामालयं करुणालयम्।
नमामि भगवत्पादं, शङ्करं लोकशङ्करम् ॥१७॥

परतत्त्वलीनमनसे, प्रणमद्भवबन्धमोचनायाशु।
प्रकटितपरतत्त्वाय, प्रणतिं कुर्मः सदाशिवेन्द्राय ॥१८॥

आशावसनो मौनी, नैराश्यालङ्कृतः शान्तः।
करतलभिक्षापात्रस्तरुतलनिलयो मुनिर्जयति ॥१९॥

( १६ )

त्र्यक्ष दीनसत्कृपाकटाक्ष ते नमः शिवाय,
दक्षसप्ततन्तुनाशदक्ष ते नमः शिवाय।
ऋक्षराजभानुपावकाक्ष ते नमः शिवाय,
रक्ष मां प्रपन्नमात्ररक्ष ते नमः शिवाय ॥

( २० )

न्यङ्कुपाणये शिवङ्कराय ते नमः शिवाय,
सङ्कटाब्धितीर्णकिङ्कराय ते नमः शिवाय।
पङ्कभीषिताऽभयङ्कराय ते नमः शिवाय,
पङ्कजाननाय शङ्कराय ते नमः शिवाय ॥

( २१ )

कर्मपाशनाश नीलकण्ठ ते नमः शिवाय,
शर्मदाय नर्य(१)भस्मकण्ठ ते नमः शिवाय।
निर्ममर्षिसेवितोपकण्ठ ते नमः शिवाय,
कुर्महे नतीर्नमद्विकुण्ठ ते नमः शिवाय ॥

( २२ )

विष्टपाधिपाय नम्रविष्णवे नमः शिवाय,
शिष्टविप्रहृद्गुहाचरिष्णवे नमः शिवाय।
इष्टवस्तुनित्यतुष्टजिष्णवे नमः शिवाय,
कष्टनाशनाय लोकजिष्णवे नमः शिवाय ॥

( २३ )

अप्रमेयदिव्यसुप्रभाव ते नमः शिवाय,
सत्प्रपन्नरक्षणस्वभाव ते नमः शिवाय।

( १ )—नर्यभस्म—श्रौताग्निहोत्रभस्म।

स्वप्रकाश निस्तुलानुभाव ते नमः शिवाय,
विप्रडिम्भदर्शितार्द्रभाव ते नमः शिवाय ॥

( २४ )

सेवकाय मे मृड प्रसीद ते नमः शिवाय,
भावलभ्यतावकप्रसाद ते नमः शिवाय।
पावकाक्ष देवपूज्यपाद ते नमः शिवाय,
तावकाङ्घ्रिभक्तदत्तमोद ते नमः शिवाय॥

( २५ )

भुक्तिमुक्तिदिव्यभोगदायिने नमः शिवाय,
शक्तिकल्पितप्रपञ्चभागिने नमः शिवाय।
भक्तसङ्कटापहारयोगिने नमः शिवाय,
युक्तसन्मनःसरोजयोगिने नमः शिवाय ॥

( २६ )

अन्तकान्तकाय पापहारिणे नमः शिवाय,
शान्तमाय दन्तिचर्मधारिणे नमः शिवाय।
सन्तताश्रितव्यथाविदारिणे नमः शिवाय,
जन्तुजातनित्यसौख्यकारिणे नमः शिवाय ॥

( २७ )

शूलिने नमोनमः कपालिने नमः शिवाय,
पालिने विरिञ्चितुण्डमालिने नमः शिवाय।
लीलिने विशेषरुण्डमालिने नमः शिवाय,
शीलिने नमः प्रपुण्यशालिने नमः शिवाय ॥

शिवपञ्चाक्षरमुद्रां चतुष्पदोल्लासपद्यमणिघटिताम् ।
नक्षत्रमालिकामिह दधदुपकण्ठं नरो भवेत्सोमः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ श्रीशिवपञ्चाक्षरनक्षत्रमालास्तोत्रं सम्पूर्णम् ॥ शुभम् ॥

## श्रीविष्णोः स्मरणम् ।

स्तोष्ये भक्त्या विष्णुमनादिं जगदादिम्,
यस्मिन्नेतत् संसृतिचक्रं भ्रमतीत्थम् ।
यस्मिन्दृष्टे नश्यति तत्संसृतिचक्रं,
तं संसारध्वान्तविनाशं हरिमीडे ॥१॥

मत्स्यः कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्यः,
काकुत्स्थः कंसघाती मनसिजविजयी यश्च कल्किर्भविष्यन् ।
विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थापनार्थाः,
पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥२॥

यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी,
तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः ।
सतां धाता स्वच्छो निगमगणगीतो व्रजपतिः,
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥३॥

श्रियः पतिर्यज्ञपतिः, प्रजापति-
र्धियां पतिर्लोकपतिर्धरापतिः ।
पतिर्गतिश्चान्धकवृष्णिसात्वतां,
प्रसीदतां मे भगवान् सतां पतिः ॥४॥

नमोऽस्त्वनन्ताय सहस्रमूर्तये,
सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते,
सहस्रकोटीयुगधारिणे नमः ॥५॥

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥६॥

सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु, मा कश्चिद्दुःखभाग्भवेत् ॥७॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी।
देशोऽयं क्षोभरहितो, ब्राह्मणाः सन्तु निर्भयाः ॥८॥

महादेव ! महादेव ! महादेवेति यो वदेत्।
वत्सं गौरिव गौरीशो, धावन्तमनुधावति ॥९॥

देवेभ्यो दानवेभ्य· पितृमुनिपरिषत्सिद्धविद्याधरेभ्यः।
साध्येभ्यश्चारणेभ्यो मनुजपशुपतज्जातिकीटादिकेभ्य
श्रीकैलासप्ररूढास्तृणविटपिमुखाश्चापि ये सन्ति तेभ्यः।
सर्वेभ्यो निर्विचारं नतिमुपरचये शर्वपादाश्रयेभ्यः ॥१०॥

श्रीसाम्बसदाशिवार्पणमस्तु।

पाद्मे—दिवारात्रिकृतं पापं, यत्किञ्चित्पूर्वजन्मभिः।
तत्सर्वं विलयं याति, माहात्म्यपठनात् कलौ ॥

माहात्म्यमिति सामान्योपादानेऽपि सहस्रनामस्तोत्रं पठनीयम्। तदुक्तं स्कान्दे—

विष्णोर्नामसहस्रं च, कलिकाले पठेत्तु यः।

सदाशिवसमारम्भां, शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां, वन्दे गुरुपरम्पराम् ॥२०॥

ॐ नमः श्रीब्रह्मविद्यासम्प्रदायकर्तृभ्यो महागुरुभ्यः ।



# अथ शिवपञ्चाक्षरनक्षत्रमालास्तोत्रम् (१) ।

( १ )

श्रीमदात्मने गुणैकसिन्धवे नमः शिवाय,
धामलेशधूतकोकवन्धवे नमः शिवाय ।
नामशेषितानमद्भवान्धवे नमः शिवाय,
पामरेतरप्रधानवन्धवे नमः शिवाय ॥

( २ )

कालभीतविप्रबालपाल ते नमः शिवाय,
शूलभिन्नदुष्टदक्षफाल ते नमः शिवाय ।
मूलकारणाय कालकाल ते नमः शिवाय,
पालयाऽधुना दयालवाल ते नमः शिवाय ॥

( ३ )

इष्टवस्तुमुख्यदानहेतवे नमः शिवाय,
दुष्टदैत्यवंशधूमकेतवे नमः शिवाय ॥
सृष्टिरक्षणाय धर्मसेतवे नमः शिवाय,
अष्टमूर्तये वृषेन्द्रकेतवे नमः शिवाय ॥

---

१—अस्य स्तोत्रस्य महामन्त्रस्वरूपत्वात् प्रथमं श्रीगुरोर्मुखादध्येतव्यमिदम् । पश्चात्पाठोऽस्य विधेयः ।

( ४ )

आपदद्रिभेदटङ्कहस्त ते नमः शिवाय,
पापहारिदिव्यसिन्धुमस्त ते नमः शिवाय।
पापदारिणे लसन्नमस्तते नमः शिवाय,
शापदोषखण्डनप्रशस्त ते नमः शिवाय ॥

( ५ )

व्योमकेश दिव्यभव्यरूप ते नमः शिवाय,
हेममेदिनीधरेन्द्रचाप ते नमः शिवाय।
नाममात्रदग्धसर्वपाप ते नमः शिवाय,
कामनैकतानहृद्दुराप ते नमः शिवाय ॥

( ६ )

ब्रह्ममस्तकावलीनिबद्ध ते नमः शिवाय,
जिह्मगेन्द्रकुण्डलप्रसिद्ध ते नमः शिवाय।
ब्रह्मणे प्रणीतवेदपद्धते नमः शिवाय,
जिह्मकालदेहदत्तपद्धते नमः शिवाय ॥

( ७ )

कामनाशनाय शुद्धकर्मणे नमः शिवाय,
सामगानजायमानशर्मणे नमः शिवाय।
हेमकान्तिचाकचक्यवर्मणे नमः शिवाय,
सामजासुराङ्गलब्धचर्मणे नमः शिवाय ॥

( ८ )

जन्ममृत्युघोरदुःखहारिणे नमः शिवाय,
चिन्मयैकरूपदेहधारिणे नमः शिवाय।
मन्मनोरथावपूर्तिकारिणे नमः शिवाय,
सन्मनोगताय कामवैरिणे नमः शिवाय ॥

( ९ )

ग्रक्षराजवन्धवे दयालवे नमः शिवाय,
दक्षपाणिशोभिकाञ्चनालवे नमः शिवाय।
पक्षिराजवाहहृच्छयालवे नमः शिवाय,
अक्षिफाल वेदपूततालवे नमः शिवाय॥

( १० )

दक्षहस्तनिष्ठजातवेदसे नमः शिवाय,
अक्षरात्मने नमद्बिडौजसे नमः शिवाय।
दीक्षितप्रकाशितात्मतेजसे नमः शिवाय,
उक्षराजवाह ते सतां गते नमः शिवाय॥

( ११ )

राजताचलेन्द्रसानुवासिने नमः शिवाय,
राजमाननित्यमन्दहासिने नमः शिवाय।
राजकोरकावतंसभासिने नमः शिवाय,
राजराजमित्रताप्रकाशिने नमः शिवाय॥

( १२ )

दीनमानवाऽऽलिकामधेनवे नमः शिवाय,
सूनबाणदाहकृत्कृशानवे नमः शिवाय।
स्वानुरागभक्तरत्नसानवे नमः शिवाय,
दानवान्धकारचण्डभानवे नमः शिवाय॥

( १३ )

सर्वमङ्गलाकुचाग्रशायिने नमः शिवाय,
सर्वदेवतागणातिशायिने नमः शिवाय।
पूर्वदेवनाशसंविधायिने नमः शिवाय,
सर्वमन्मनोजभङ्गदायिने नमः शिवाय॥

( १४ )

स्तोकभक्तितोऽपि भक्तपोषिणे नमः शिवाय,
माकरन्दसारवर्षिभाषिणे नमः शिवाय।
एकबिल्वदानतोऽपि तोषिणे नमः शिवाय,
नैकजन्मपापजालशोषिणे नमः शिवाय॥

( १५ )

सर्वजीवरक्षणैकशीलिने नमः शिवाय,
पार्वतीप्रियाय भक्तपालिने नमः शिवाय।
दुर्विदग्धदैत्यसैन्यदारिणे नमः शिवाय,
शर्वरीशधारिणे कपालिने नमः शिवाय॥

( १६ )

पाहि मामुमामनोज्ञदेह ते नमः शिवाय,
देहि मे वरं सिताद्रिगेह ते नमः शिवाय।
मोहितर्षिकामिनीसमूह ते नमः शिवाय,
स्वेहितप्रसन्न कामदोह ते नमः शिवाय॥

( १७ )

मङ्गलप्रदाय गोतुरङ्ग ते नमः शिवाय,
गङ्गया तरङ्गितोत्तमाङ्ग ते नमः शिवाय।
सङ्गरप्रवृत्तवैरिभङ्ग ते नमः शिवाय,
अङ्गजाऽरये करेकुरङ्ग ते नमः शिवाय।

( १८ )

ईहितक्षणप्रदानहेतवे नमः शिवाय,
आहिताग्निपालकोक्षकेतवे नमः शिवाय।
देहकान्तिधूतरौप्यधातवे नमः शिवाय,
गेहदुःखपुञ्जधूमकेतवे नमः शिवाय।

वेदानां च पुराणानां, फलमाप्नोति मानवः ॥

कलौ कर्मणां न्यूनातिरिक्तपरिहारकं (१)हरिस्मरणमेव, तदुक्तं बृहन्नारदीये—

न्यूनातिरिक्ततासिद्धैय, कलौ वेदोक्तकर्मणाम् ।
हरिस्मरणमेवान्ते, सम्पूर्णफलदायकम् ॥३॥

हरिनामस्मरणकीर्तनप्रकारं चेत्थं सन्तो(२)ऽनुशासति—

---

१—हरिहरयोरैकात्मकत्वात्तयोरभेदः। 'हरति पापानीति हरिः'। अस्य विष्णुनामत्वात्पापहरणप्रवृत्तिनिमित्तकतया उत्कृष्टनामत्वात् शिवनामत्वमेव।

यथा हरिवंशे कैलासयात्रायां शिववचनम्—

नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥ इति ।

आश्वलायनगृह्ये शूलगवेऽप्युक्तम्—

"यान्युच्छ्रितानि नामधेयानि तानि महादेवस्य" इति ।

"उमासहायं परमेश्वरं प्रभुम्" इत्युपक्रम्य, "स एव विष्णुः स प्राणः" इति श्रुतेः।

'आवयोरन्तरं नास्ति शब्दैरर्थैरुमापते' इत्यादि स्मृतेश्च द्वयोरैक्यं सकलश्रुति-स्मृति-पुराणेतिहासप्रसिद्धम् । भेद-दर्शने दोषः। यथाऽऽह नामापराधवचने—

सन्निन्दाऽसति नामवैभवकथा श्रीशेषयोर्भेदधी-
रश्रद्धा श्रुतिशास्त्रदैशिकगिरां नाम्न्यर्थवादभ्रमः ॥
नामाऽस्तीति निषिद्धवृत्तिविहितत्यागो हि धर्मान्तरैः
साम्यं नाम्नि जपे शिवस्य च हरेर्नामापराधा दश ॥ इति।

२—सन्तश्चात्र वेदविद एव, न तु लौकिकाः ।

# श्रीवासुदेवो जयति

श्रीहरिर्जयति। भगवते श्रीकृष्णपरमात्मने गीताऽमृतदात्रे नमः।

श्रीकृष्ण एवैकः। श्रीकृष्णो मम गुरुः। श्रीकृष्णो मम स्वामी। श्रीकृष्णो मम गतिः। श्रीकृष्णो मान्त्राता। श्रीकृष्णं चिन्तयामि। श्रीकृष्णं कीर्तयामि। श्रीकृष्णं भजे। श्रीकृष्णेन पालितोऽस्मि। श्रीकृष्णेन संवर्द्धनीयोऽहम्। श्रीकृष्णाय नमः। नमः श्रीकृष्णाय। श्री कृष्णान्मम सुखम्। श्रीकृष्णादन्यः कोऽपि मम नाऽस्ति। श्रीकृष्णस्य दासोऽहम्। श्रीकृष्णस्य यशो मम जीवनम्। श्रीकृष्णे मन्मतिरस्तु निश्चला। श्रीकृष्णे मन्मनो रमताम्। भोः श्रीकृष्ण! जय जय। हे श्रीकृष्ण! मां पाहि। श्रीकृष्ण! मम पापं नाशय। श्रीकृष्ण! मम तापं शमय। श्रीकृष्ण! ममापराधं क्षमस्व। श्रीकृष्ण! मम शरणं भव। श्रीकृष्ण! मामनुगृहाण। श्रीकृष्ण! ममाऽभीष्टं देहि। श्रीकृष्ण! मयि प्रसीद।

लक्ष्मीपते! कमलनाभ! सुरेश! विष्णो!
वैकुण्ठ! कृष्ण! मधुसूदन! पुष्कराक्ष!।
ब्रह्मण्य! केशव! जनार्दन! वासुदेव!
देवेश! देहि कृपणस्य करावलम्बम्॥

रामो दाशरथिः शूरो, लक्ष्मणानुचरो बली॥
काकुत्स्थः पुरुषः पूर्णः, कौसल्येयो रघूत्तमः॥
वेदान्तवेद्यो यज्ञेशः पुराणपुरुषोत्तमः।
जानकीवल्लभः श्रीमानप्रमेयपराक्रमः॥

वासुदेव। भगवन्। भक्तवत्सल। दयानिधे। दीनबन्धो। अच्युत। अनन्त। अधोक्षज। आदिपुरुष। वेदपुरुष।

यज्ञपुरुष । परमपुरुष । महापुरुष । पुरुषोत्तम । पद्मनाभ । नारायण । चक्रपाणे । चतुर्भुज । गरुडध्वज । पीताम्बर । घनश्याम । लक्ष्मीकान्त । जगन्नाथ । हृषीकेश । केशव । माधव । मधुसूदन । कैटभकर्शन । जनार्दन । जगदीश्वर । मुकुन्द । गोविन्द । मुरहर । मुरलीधर । दामोदर । वासुदेवानन्दकन्दन । देवकीशावक । नन्दनन्दन । यशोदावत्सल । मथुरानाथ । गोकुलविहारिन् । वृन्दावनविलासिन् । गोपीजनजीवन । राधावल्लभ । गोवर्धनधारिन् । वनमालिन् । कालियदमन । कंसमर्दन । शिशुपालदलन । पाण्डवमण्डन । शैव्यसुग्रीवमेघपुष्पवलाहकवाहन । विजयमालिन् । रथचारिन् । दारुकसारथे । भवभयभञ्जन । भक्तजनमनोरञ्जन । रुक्मिणीरमण । कौस्तुभभूषण । द्वारकानायक । यदुपते । यादवेन्द्र । कृष्णचन्द्र । श्रीपते । इति ।

नमः श्रीकृष्णाय विष्णवे । श्रीकृष्णाय नमो विष्णवे । श्रीकृष्णाय विष्णवे नमः । हरये परमात्मने नमः । हरये नमः परमात्मने । परमात्मने नमो हरये ।

इत्थं क्रमेणैकैकशो द्वन्द्वशो यथारुचि वा नाम्नां प्रांशु वा उपांशु वा मनसा वा जपन्निव पठन्निव कथयन्निव गायन्निव परमेण प्रेम्णा अहर्निशं पुनः पुनरावर्तयेदिति ॥ॐ॥

यस्य स्मृत्या च नामोक्त्या, तपो यज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति, सद्यो वन्दे तमच्युतम् ॥

श्री महाविष्णवे नमः ॥३॥ ॐ तत्सद् ब्रह्मार्पणमस्तु ।

गणेशमन्दिरे काश्यां श्रीवीरेश्वरसन्निधौ ।
प्रीतये देवदेवस्य व्यलिखच्छ्रीगजाननः ॥

—:※:—

* श्रीललितादेव्यै नमः *

# * अथ ललितापञ्चरत्नम् *

प्रातः स्मरामि ललितावदनाऽरविन्दं
बिम्बाऽधरं पृथुलमौक्तिकशोभिनासम्।
आकर्णदीर्घनयनं मणिकुण्डलाऽऽढ्यं
मन्दस्मितं मृगमदोज्ज्वलफालदेशम् ॥ १ ॥
प्रातर्भजामि ललिताभुजकल्पवल्लीं
रक्ताऽङ्गुलीयलसदङ्गुलिपल्लवाऽऽढ्याम् ।
माणिक्यहेमवलयाऽङ्गदशोभमानां
पुण्ड्रेक्षुचापकुसुमेषु-सृणीर्दधानाम् ॥ २ ॥
प्रातर्नमामि ललिताचरणाऽरविन्दं
भक्तेष्टदाननिरतम्भवसिन्धुपोतम् ।
पद्मासनाऽऽदिसुरनायकपूजनीयं
पद्माऽङ्कुशध्वजसुदर्शनलाञ्छनाऽऽढ्यम् ॥ ३ ॥
प्रातः स्तुवे परशिवां ललिताम्भवानीं
त्रय्यन्तवेद्यविभवां करुणाऽनवद्याम्।
विश्वस्य सृष्टिविलयस्थितिहेतुभूतां
विद्येश्वरीं निगमवाङ्मनसाऽतिदूराम् ॥ ४ ॥
प्रातर्वदामि ललिते ! तव पुण्य नाम।
कामेश्वरीति कमलेति महेश्वरीति ॥

श्रीशाम्भवीति जगतां जननी परेति ।
वाग्देवतेति वचसा त्रिपुरेश्वरीति ॥५॥
यः श्लोकपञ्चकमिदं ललिताऽम्बिकायाः
सौभाग्यदं सुललितं पठति प्रभाते ॥
तस्मै ददाति ललिता झटिति प्रसन्ना
विद्यां श्रियं विमलसौख्यमनन्तकीर्त्तिम् ॥६॥

श्रीमत्परमहंस-परिव्राजकाऽऽचार्य-भगवत्पूज्यपाद-जगद्गुरु-श्रीमदाद्यशङ्कराचार्यविरचितं ललितापञ्चरत्नं सम्पूर्णम् ।

शुभम् ।



नमो गौरीशाय स्फटिकधवलाङ्गाय च नमो।
नमो लोकेशाय स्तुतविबुधलोकाय च नमः॥
नमः श्रीकण्ठाय क्षपितपुरदैत्याय च नमो।
नमः फालाक्षाय स्मरमदविनाशाय च नमः॥

शुभम्भूयात्।

